॥ सत्यव्रतोक्तदामोदरस्तोत्रम् ॥

श्रीगणेशाय नमः ॥

सिन्धुदेशोद्भवो विप्रो नाम्ना सत्यव्रतः सुधीः ।
विरक्त इन्द्रियार्थेभ्यस्त्यक्त्वा पुत्रगृहादिकम् ॥ १॥

वृन्दावने स्थितः कृष्णमारिराध दिवानिशम् ।
निःस्वः सत्यव्रतो विप्रो निर्जनेऽव्यग्रमानसः ॥ २॥

कार्तिके पूजयामास प्रीत्या दामोदरं नृप ।
तृतीयेऽह्नि सकृद्भुङ्क्ते पत्रं मूलं फलं तथा ॥ ३॥

पूजयित्वा हरिं स्तौति प्रीत्या दामोदराभिधम् ॥ ४॥

सत्यव्रत उवाच ।
नमामीश्वरं सच्चिदानन्दरूपं लसत्कुण्डलं गोकुले भ्राजमानम् ।
यशोदाभियोलूखले धावमानं परामृष्टमत्यन्ततो दूतगोप्या ॥ ५॥

रुदन्तं मुहुर्नेत्रयुग्मं मृजन्तं कराम्भोजयुग्मेन सातङ्कनेत्रम् ।
मुहुःश्वासकं पत्रिरेखाङ्ककण्ठं स्थितं नौमि दामोदरं भक्तवन्द्यम् ॥ ६॥

वरं देव देहीश मोक्षावधिं वा न चान्यं वृणेऽहं वरेशादपीह ।
इदं ते वपुर्नाथ गोपालबालं सदा मे मनस्याविरास्तां किमन्यैः ॥ ७॥

इदं ते मुखाम्भोजमत्यन्तनीलैर्वृतं कुन्तलैः स्निग्धवक्त्रैश्च गोप्या ।
मुहुश्चुम्बितं बिम्बरक्ताधरं मे मनस्याविरास्तामलं लक्षलाभैः ॥ ८॥

नमो देव दामोदरानन्त विष्णो प्रसीद प्रभो दुःखजालाब्धिमग्नम् ।
कृपादृष्टिवृष्ट्याऽतिदीनं च रक्ष गृहाणेश मामज्ञमेवाक्षिदृश्यम् ॥ ९॥

कुबेरात्मजौ वृक्षमूर्ती च यद्वत्वया मोचितौ भक्तिभाजौ कृतौ च ।
तथा प्रेमभक्तिं स्वकां मे प्रयच्छ न मोक्षेऽऽग्रहो मेऽस्ति दामोदरेह ॥ १०॥

नमस्ते सुदाम्ने स्फुरद्दीप्तधाम्ने तथोरस्थविश्वस्य धाम्ने नमस्ते ।
नमो राधिकायै त्वदीयप्रियायै नमोऽनन्तलीलाय देवाय तुभ्यम् ॥ ११॥

नारद उवाच ।

सत्यव्रतद्विजस्तोत्रं श्रुत्वा दामोदरो हरिः ।
विद्युल्लीलाचमत्कारो हृदये शनकैरभूत् ॥ १२॥

इति श्रीसत्यव्रतकृतदामोदरस्तोत्रं सम्पूर्णम् ॥